भारतीय-साहित्य-ग्रन्थमालायाः षष्ठं पुष्पम्



( ६ )

# सावित्रीनाटकम्

सर्वतन्त्रस्वतन्त्राणां श्रीमतां पं० रामयशस्त्रिपाठिमहोदयानामन्तेवासिना
काशीस्थ श्री हरिहर संस्कृत पाठशालायाः प्रधानाध्यापकेन
व्याकरण-साहित्य-सांख्ययोग-पुराणेतिहासाचार्येण
एम० ए०, साहित्यरत्न, इत्युपाधिधारिणा
पं० श्रीकृष्णमणि त्रिपाठिना
कृतं सम्पादितं च ।

प्रकाशकः—

भारतीय-साहित्य-विद्यालयः, काशी

प्रथमं संस्करणम् ]  संवत् २०१३  [ मूल्यम् ।-)

प्रकाशकः—
भारतीय-साहित्य-विद्यालय,
१४/२६ टेढीनीम,
वाराणसी ।

मुद्रकः—
स्वामी द्वारिकादासशास्त्री
संकठा प्रेस,
सोरा कूआ, वाराणसी–१



रामचन्द्राभ्रयुग्माब्दे वैक्रमे पूर्णिमातिथौ ।
ज्येष्ठे मासे सिते पक्षे ग्रीष्मर्तौ मन्दवासरे ॥
त्रिपाठ्युपाह्व श्रीकृष्णमणिशास्त्री सतां मुदे ।
कृतवानिदमेकाङ्कि सावित्रीनाटकं शुभम् ॥

# दो शब्द

संस्कृत वाङ्मय के सिद्धान्तानुसार मानवसमाज की आधारभित्ति धर्म और सदाचार माने गये हैं।

आचारहीनं न पुनन्ति वेदा
यद्यप्यधीताः सह षड्भिरङ्गैः।

के अनुसार हिन्दूसमाज में सदाचार का एक प्रमुख स्थान है। मानव-जीवन में धर्म और सदाचार की महत्ता एवं उपादेयता संसार के सभी महापुरुषों ने एक स्वर से स्वीकार की है। जहां तक सनातन धर्म का सम्बन्ध है, उसकी तो मान्यता ही यह है कि—

गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः।
अलुब्धदानशीलैश्च सप्तभिर्धार्यते मही॥

अर्थात्—यह पृथ्वी गौ, ब्राह्मण, वेद, सती नारी, सत्यवादी, निर्लोभी और दानशील पुरुष, इन सात स्तम्भों पर टिकी हुई है।

लोकोत्तर आदर्शचरित्रा भारतीय पतिव्रता सती देवियों ने सृष्टि के आरम्भ से आजतक क्या क्या चमत्कार दिखाये हैं? इस बात को विस्तार से बताने की आवश्यकता नहीं है; क्योंकि इतिहास का पाठक इससे भलींभाँति परिचित है। और आजकल भी सती चरित्रों की अद्भुत घटनायें समाचार पत्रों में प्रायः प्रकाशित होती ही रहती हैं। फिर भी लोकोत्तर विभूतियों का जितना ही गुणगान किया जाय, उतना ही थोड़ा है।

सती, सीता, दमयन्ती, अनुसूया, नर्मदा आदि पतिव्रता सती देवियां हिन्दू जाति की भूषण रही हैं। उन्हीं देवियों में सती सावित्री की भी गणना है।

सती सावित्री के आदर्श और अद्भुत चरित्र की कथा महाभारत एवं मत्स्य आदि पुराणों में विस्तार के साथ लिखी हुई है। जिसका सारांश लेकर इस नाटक का निर्माण हुआ है।

प्रस्तुत पुस्तक में सती सावित्री का आदर्श चरित्रचित्रण बालक-बालिकाओं के मनोरञ्जन के साथ साथ चरित्र सुधार के लिये एकाङ्कि नाटक के रूप में किया गया है। संस्कृत भाषा को न जाननेवालों के लिए अन्त में राष्ट्रभाषा में इस नाटक का कथासार भी दे दिया गया है।

आशा है—बालिकाविद्यालयों के प्रधानाचार्य अपने अपने विद्यालयों में समय समय पर इस नाटक का अभिनय कराकर उन बालिकाओं के चरित्र निर्माण में सहायक होंगे, जिनसे भारत का गौरव सदा बना रहेगा और भारतीय नारियों का मस्तक विश्व में ऊँचा होता रहेगा।

इस पुस्तक के प्रकाशन में आर्थिक सहयोग देनेवाले धर्म-प्रिय, काशीनिवासी, पं० व्रजनन्दन पाण्डेय को अनेकशः धन्यवाद हैं, जिनकी उदारता से यह पुस्तक प्रकाशित हुई है।

अन्त में इसके मुद्रक स्वामी द्वारिकादास शास्त्री का भी मैं अत्यन्त आभारी हूँ कि जिनके सत्प्रयत्न एवं तत्परता से यह पुस्तक इतने सुन्दर-रूप में आपके सम्मुख पहुंच सकी है।

ज्येष्ठ पूर्णिमा
२०१३

श्रीकृष्णमणि त्रिपाठी

उन भारतीय पतिव्रता सती देवियों को
जिनसे भारत का मस्तक
सदा उन्नत रहा है
सादर समर्पित !

—लेखक

# पात्रपरिचयः

—:o:—

सत्यवान्— नायकः, राज्ञो द्युमत्सेनस्य पुत्रः

सावित्री — नायिका, राज्ञोऽश्वपतेर्दुहिता

यमः — प्रेतानां शासकः, भगवतः सूर्यस्यपुत्रः

नारदः — देवर्षिः, ब्रह्मणो मानसपुत्रः

❀ श्रीसावित्रीदेव्यै नमः ❀

# सावित्रीनाटकम्

यस्याः प्रसादलवमात्रमवाप्य सत्यो
लोकेऽत्र चारुचरिता महिता भवन्ति ।
मोहान्धकार—विनिवारण—हेतुभूता
वाग्देवता दिशतु सा सततं शुभं नः ॥

( भगवन्नामकीर्तयतो देवर्षेर्नारदस्य प्रवेशः )

नारदः—( स्वगतम् ) श्रीमन्नारायण ! नारायण !! नारायण !!! (३) महाकालस्य महिमा प्रबलः अस्ति, कर्मणो गतिः विचित्रा विद्यते, अवश्यं भावि भवत्येव । अद्य सत्याः सावित्रीदेव्याः पत्युः सत्यवतः आयुः पूर्णं जातम् । इदानीं सावित्र्याः सौभाग्य-सूर्यः अस्तं गमिष्यति । कियत्कालानन्तरं यमराज आगत्य सत्यवतः प्राणान् नेष्यति । ततः सावित्र्याः जीवनं दुःखान्तं भविष्यति । अत्र नास्ति कस्यचिद् अधिकारः; यतो हि ईश्वरस्य नियमं परिवर्तयितुं न शक्नोति कश्चित् ।

यद्यप्युद्वाहकालेऽहं राजानं स्पष्टमुक्तवान् ।
अल्पायुः सत्यवानस्ति गुणरत्नाकरोऽपि सन् ॥

तथाप्यश्वपती राजा सावित्रीच्छाविशेषतः ।
तस्याः सत्यवता सार्द्धं विवाहमकरोन्मुदा ॥

अथापि स्वप्रतिज्ञाऽनुसारं सावित्र्याः सौभाग्यं संरक्षितुं-मयावश्यं प्रयत्नः कर्तव्यः । अस्मिन्कार्ये भूतभावनो भगवान् सदाशिवः सहायको भवतु ।

( ततः प्रविशति सोद्वेगं गच्छन् यमराजः )

यमः—किमयं देवर्षिर्नारदो दृश्यते ? ( अग्रे गत्वा हस्तौ सम्पुटीकृत्य ) देवर्षे ! सूर्यसूनुः यमराजोऽहं भवन्तमभिवादये ।

नारदः—आयुष्मन्नेधि यमराज ! अस्ति ते कुशलं समीचीनम् ?

यमः—तत्रभवतां भवतां कृपया सर्वमस्ति मामकीनं कुशलम् ।

नारदः—सौम्य ! कथमेवं महता वेगेन गच्छन्, उद्विग्न इव लक्ष्यसे त्वम् ?

यमः—भगवन् ! अद्य सर्वगुणगरिष्ठस्य सत्यवत आयुः पूर्णं जातमस्ति, अतस्तमानेतुं वेगेन व्रजामि ।

नारदः—भवतोऽनुचराः क गता यद्भवानेव तमानेतुं गच्छति ?

यमः—देवर्षे ! पूर्वं ममानुचरा एव तत्र गता आसन्, किन्तु सत्यवतो धर्मपत्न्याः पतिव्रतायाः सावित्र्याः तेजः सोढुमशक्नुवन्तः ते परावृताः, अतोऽहं स्वयं तत्र गच्छामि ।

नारदः—सौम्य ! सत्यमस्ति भारतीयानां पतिव्रतानां देवीनां प्रभाव एव-मेवास्ति । मयापि ब्रह्मणः सभायां देवैर्बहुशो गीयमानं पति-व्रतानां प्रभावातिशयं सर्वदा श्रूयते । सतीदेव्यो हि स्वसतीत्व-बलेन तत्कार्यं कर्तुं शक्नुवन्ति यद् योगिनोऽपि न कर्तुं प्रभवन्ति ।

यमः—देव ! अहमस्मि सर्वेषां शासकः, समेषां प्राणिनां प्राणा ममा-धीनाः वर्तन्ते । किं करिष्यति वराकी सावित्री । अहं हि बलात्सत्यवतः प्राणान् नेष्यामि ।

नारदः—वत्स ! नैवं वाच्यम् , मन्ये, भारतीयानां सतीनां महत्त्वं त्वं न जानासि। किं त्वया सत्या अनसूयाया नाम न श्रुतमस्ति, या स्वसतीत्वबलेन मृतमपि नर्मदायाः पतिमुपजीवितवती। किं बहुना अखिललोकस्रष्टारं ब्रह्माणम्, समस्तलोकपालकं भगवन्तं विष्णुम्, सर्वसंहारकं सदाशिवं च बालकरूपेण परिणतवती । निजपातिव्रत्यमहिम्ना सती नर्मदा तु भवतो जनकस्य सूर्यस्य उदयमपि अवारुधत्।

यमः—किमेतावत्यः शक्तिशालिन्यः सत्यो भवन्ति ?

नारदः—अथ किम् , पतिप्राणानां तपस्विनीनां सतीनां किमप्यनिष्टं कर्तुं कोऽपि न शक्नोति । अन्येषां का कथा—

तपनस्तप्यतात्यन्तं दहनोऽपि न दह्यते ।
कल्पन्ते सर्वं तेजांसि दृष्ट्वा पातिव्रतं महः ॥

यमः—आ एवम् ?

नारदः—अत्र कः सन्देहः ? सतीनां चरित्रमेवमेवाद्भुतं भवति, श्रूयतामेकमुदाहरणम् ।

सुतं पतन्तं प्रसमीक्ष्य पावके न बोधयामास पतिं पतिव्रता ।
पतिव्रताशापभयेन शङ्कितो हुताशनश्चन्दनशीतलोऽभवत् ॥

यमः—भगवन् ! ज्ञातं सतीनां लोकोत्तरं कौशलम् ततः किं कर्तव्यम् ?

नारदः—चिरञ्जीविन् ! पतिव्रतासु सदा नम्रतया व्यवहर्तव्यम् ।

यमः—देवर्षे ! त्वदाज्ञानुसारमेव तत्र वर्तिष्ये ।

नारदः—सौम्य ! गच्छ, सद्बुद्धिरस्तु ते । विजयन्तां भारतीयाः सतीदेव्यः । आः ! इदं दृश्यताम्—

सत्यवान् राजपुत्रोऽयं पितृसेवापरायणः ।
वने समिधमादातुं सावित्र्या सह गच्छति ॥

( यमनारदनिर्गमनम् )

( सत्यवता सह सावित्र्याः प्रवेशः )

सावित्री—स्वामिन् ! अहं भवन्तं प्रार्थयामि, कृपया मम प्रार्थनायां ध्यानं देयम् । इतः अग्रे न गन्तव्यम् । नाथ ! अनायासं मम दक्षिणं नेत्रं स्पन्दते, हृदयं कम्पते, बाहुश्च स्फुरति, न जाने, अद्य किम् अशुभं भविष्यति ?

सत्यवान्—प्रिये ! यदा अहं त्वया सह तिष्ठामि तदा चिन्तायाः किं प्रयोजनम् ? मम सम्मुखे कोऽपि तव किमपि अनिष्टं कर्तुं न शक्नुयात्, मा उद्विग्ना भव, शान्तचित्तया त्वया अग्रे गन्तव्यम् ।

सावित्री—प्राणनाथ ! यदि तव समक्षे अहं कस्याञ्चिद् आपत्तौ पतेयम्, तर्हि त्वं मम रक्षां करिष्यसि, परन्तु त्वयि आपन्ने किमहं करिष्यामि ? अद्य किमपि न कर्तव्यम्, पित्रोः समीपे आश्रमे प्रतिपरावर्तितव्यम्, यात्रासमये मम अनेकानि अपशकुनानि जातानि । अतो अग्रे मा गन्तव्यम् ।

सत्यवान्—मया फलोच्चयः सुभ्रु ! त्वया पुष्पोच्चयः कृतः ।
इन्धनं न कृतं तावत्तत्करिष्यामि साम्प्रतम् ॥
त्वमस्य सरसस्तीरे द्रुमच्छाया समाश्रिता ।
क्षणमात्रं प्रतीक्षस्व विश्रमस्व च भामिनि ! ॥

प्रिये ! न मन्यसे तर्हि अस्मादेव वृक्षात् किञ्चित्काष्ठं गृहीत्वा माता-पित्रोः समीपे त्वया सह आश्रमं प्रति परावर्तिष्ये, यथा त्वं प्रसन्ना भवेस्तथैव करिष्यामि ।

( सत्यवान् वृक्षमारुह्य कुठारेण काष्ठं कृन्तति )

सावित्री—आः पुनः मे दक्षिणम् अक्षि स्फुरति, न जाने अद्य किम् अशिवं भविष्यति ? सर्वपालको भगवान् विष्णुः मे स्वामिनः श्वसुरयोश्च कल्याणं करोतु ।

सत्यवान्—किमिदम् ? ( शिरोवेदनामभिनीय )

आयासेन ममानेन जाता शिरसि वेदना।
तमश्च प्रविशामीव न च जानामि किञ्चन ॥

देवि ! रक्ष माम् असह्या पीडा मे मस्तके भवति, नावलोक्यते किञ्चित्। किं कुर्याम् ? गच्छेयम् ?

( सावित्री व्याकुलीभूय वृक्षसमीपे गच्छति, सत्यवांश्च वृक्षात् पतति, सावित्री तस्य मस्तकम् उत्थाप्य स्वस्य अङ्के स्थापयित्वा व्यग्रा सती अञ्चलेन व्यजनं करोति, शिरश्च शनैः शनैः स्पृशति )

सावित्री—भगवन् ! दयालो ! रक्ष ! मम प्राणवल्लभं रक्ष। ओम् स्मृतम् ! किम् अद्यैव तत्कुदिनम् उपस्थितं यदर्थं भगवान् नारदो विवाह-काले संकेतितवानासीत्। इदानीं किं कर्तव्यम् ? ( ईश्वरमभि-लक्ष्य ) सर्वेश्वर ! यदि जगति धर्मस्य किमपि गौरवं विद्यते, सत्ये कापि शक्तिः तिष्ठति पातिव्रत्यस्य च किञ्चित् महत्व-मस्ति, तर्हि मम प्राणनाथं रक्ष।

सत्यवान्—देवि ! न सोढुं शक्यते, शिरोवेदना मे उत्तरोत्तरं वर्धते एव, न किञ्चित् शाम्यति, विदीर्यते मस्तकम्, आः म्रिये !

सावित्री—नहि नाथ ! नैवमधीरो भव, न किमपि तव अनिष्टं भविष्यति। यदि अद्यावधि मया पातिव्रत्यधर्मस्य सत्यं पालनं कृतम् यदि मे पातिव्रत्यं स्वप्नेऽपि न स्खलितं विद्यते, तर्हि न कापि शक्तिः भवन्तं मत्तो वियुक्तं करिष्यति। यतोहि—

पातिव्रत्यसमं नास्ति बलं त्रैलोक्यमण्डले।
तदेव नाथ ! त्वामद्य रक्षिष्यति न संशयः ॥

( हस्ते पाशं गृहीत्वा यमराजः प्रविशति )

सत्यवान्—रक्ष देवि ! रक्ष मां, हस्ते पाशं गृहीत्वा भयङ्कराकारः कश्चित्समागतः।

सावित्री—( इतस्ततोऽवलोक्य ) प्राणनाथ ! किं ब्रवीषि ! अत्र तु न कश्चिद् दृश्यते ।

यमराजः—( स्वगतम् ) सावित्री पतिव्रता नारी अस्ति । अस्याः तेजः सोढुं न समर्थोऽस्मि । यावत्कालं सत्यवतो मस्तकम् एतस्या अङ्के स्थास्यति तावत्कालं पूर्णायुषः अपि अस्य प्राणान् ग्रहीतुं न शक्नोमि । किं कुर्याम् ! केन अधिकारेण अस्याः पतिव्रतायाः स्पर्शं कुर्याम् ?

सावित्री—आः ! कस्य अयं ध्वनिः श्रूयते । ( इतस्ततोऽवलोक्य ) अत्र तु कश्चिदपि न दृश्यते । मास्तु कश्चित्, मम धर्मस्तु अस्त्येव । अये आरण्यकाः वृक्षाः ! भवन्तः साक्षिणो भवन्तु, अयि सर्वलोकसाक्षिन् भगवन् भास्कर ! त्वमपि साक्षी भव, अये सर्वत्र संसरणशील समीर ! त्वमपि मम साक्षित्वे तिष्ठ, मम मात्रे पित्रे श्वसुराय च मम सन्देशो देयो भवद्भिः, यत् सावित्री स्वकीयं सौभाग्यं संरक्षितुं धर्मानुसारं स्वस्वामिना सत्यवता सह सती अभवत् । ( सत्यवतः शरीरमभिलक्ष्य ) प्राणेश ! कथम् एवं रुष्टोऽसि ? देहि मे प्रतिवचनम् ! यदा त्वमेव रुष्टो जातः तदा संसारे कः मयि तुष्टो भवेत् ? हृदयेश ! कथमेवं मामुपेक्षसे ? यदि त्वं मां विहाय परलोकं गन्तुमुद्यतोऽसि, तर्हि अहमपि त्वया विना स्वशरीरात् सतीत्वज्योतिः प्रज्वाल्य इदं पाञ्चभौतिकं स्थूलं शरीरंसहर्षं विसृज्य तत्र त्वया सहैव गमिष्यामि ।

यमराजः—सावित्रि ! सावधाना भव, सावधाना भव, किमिदं दुष्करं कर्म कर्तुमुद्यता भवसि ? ईश्वरस्य नियमे ध्यानं देहि, महतो-दुःखस्य विषयोऽस्ति यत् त्वादृशी विदुषी बुद्धिमती कर्तव्य-परायणा अपि नारी अस्य नश्वरस्य शरीरस्य कृते एवं प्रलापं करोति ! कथय, इदमेवास्ति विद्यायाः फलम् ?

एषैवास्ति बुद्धिमत्ता ? देवि ! बुद्ध्या कार्यं कुरु, मनो नियम्य स्वहृदये ज्ञानस्य ज्योतिः प्रज्वालय, मैवमुद्विग्ना भव।

सावित्री—अरे ! वियोगिन्यै मह्यं योगस्य शिक्षां न देहि, त्वं यदि मम कञ्चित् उपकारं कर्तुम् इच्छसि, तर्हि, अनेन कुठारेण काष्ठं छित्वा चितां विरच्य मां संसारसागरात् उद्धर। यथा जलं विनां मत्स्याः न जीवन्ति, यथा वा मनुष्ये नष्टे छायापि नश्यति, तथा अहं पतिं विना क्षणमात्रम् अपि जीवितुं न इच्छामि। ( इत्युक्त्वा यमस्याग्रे कुठारं क्षिपति )

यमराजः—सावित्री ! यद्यपि तव कथनं सत्यमस्ति, तथापि संसारमायामोहितानां प्राणिनां कृते अयं पन्था विद्यते, न ज्ञानिनां नापि बुद्धिमतां न च त्वादृशीनां विदुषीनां कृते एवं प्रलापः समुचितः।

सावित्री—भगवन् ! यत्र कुत्रापि पतिता विद्युत् दहत्येव। यथा प्रज्वलितो वनाग्निः साधारणवृक्षमिव चन्दनवृक्षमपि दाहयति, तथैव आत्मनि उपस्थितं कष्टं ज्ञानिनमपि रोदयति, विचालयति, दुःखयति च। कृपया कथय, कोऽस्ति भवान् यत् मामुपकर्तुमिच्छति ?

यमराजः—देवि ! मां ज्ञातुम् इच्छसि चेत् शृणु, अहं हि सर्वलोकचक्षुषो भगवतः सूर्यस्य पुत्रो यमोऽस्मि। संसारिणां प्राणिनां जीवनं मम अधीने विद्यते, अद्य तव स्वामिनः सत्यवतो जीवनं पूर्णं जातम्; अतः तदादातुम् इह उपस्थितोऽस्मि।

सावित्री—( विह्वला भूत्वा ) आः ! किमिदं कथयसि ! भवानेवास्ति यमराजः ! ( ईश्वरमभिलक्ष्य ) अये अशरणशरण ! करुणावरुणालय ! सर्वव्यापक विष्णो ! रक्ष मे प्राणनाथम्। भगवन् दयालो ! आगत्य स्वनाम चरितार्थं कुरु। दीनबन्धो ! रक्ष माम् अनाथाम्। अयं यमराजः मम सर्वस्वं हर्तुम् इह उपस्थितोऽस्ति।

यमराजः—देवि ! कथम् एवम् अधीरा भवसि ?

सावित्री—प्रभो ! भवन्तं सन्मुखे दृष्ट्वा विह्वला भवामि। किं कर्तव्यम्, क्व गन्तव्यम् इति न ज्ञायते। देव ! वैधव्यशोकः एवंविधः प्रबलो भवति, यत्र सहसा सर्वो विचारो विलीयते। अहं तव शरणेऽस्मि मां विधवां मा कुरु, मम पतिं परित्यज्य तस्य स्थाने मां मारय।

यमराजः—( आत्मगतम् ) कीदृशः करुणामयः आर्तनादोऽस्ति, कीदृशी विनम्रप्रार्थना विद्यते, कीदृशश्चाकर्षकोऽस्ति करुणामयो ध्वनिः, यं श्रुत्वा हृदयं द्रवीभवति, मनसि उदेति विपुला दया, किं कुर्याम् ? किं परावर्तये ? नहि, एवं कृते विधातृविधानं विनश्यति, कयाचिद् युक्त्या स्वकर्तव्यं साधयामि। ( यमः स्वपाशं सत्यवत उपरि भ्रामयति, तद् दृष्ट्वा सावित्री सहसा उत्थाय यदा यमम्प्रार्थयितुम् प्रवर्तते, तदा लब्धावसरो स पृथग्भूतात् सत्यवतः शरीरात् प्राणान् पाशेन बध्नाति )

सावित्री—( विह्वला सती ) किमिदं करोति भवान् ?

यमराजः—( सहर्षम् ) मम कार्यं सम्पन्नम्, सावित्रि ! रोदनं त्यक्त्वा लौकिकनियमानुसारम् अन्तिमं पत्युः मृतकशरीरसंस्कारं कुरु।

सावित्री—अरे किं कृतं भवता, मम पत्युः प्राणाः गृहीताः ? यदि त्वया स्वकीयं कार्यं साधितं तर्हि अहमपि स्वकर्तव्यं करोमि। तिष्ठ तावत्, अहमपि स्वप्राणनाथेन सहैवागच्छामि। ( इत्युक्त्वा सावित्री यममनुसरति )

( पटप्रक्षेपः )

( आकाशमार्गे आत्मानमनुसरन्तीं सावित्रीं दृष्ट्वा आश्चर्यचकितस्य यमस्य प्रवेशः )

यमः—( स्वयम् ) किमिदं सावित्री माम् अनुसरति ! अरे मृत्युलोकस्यापि नारी अमरलोकं गच्छति ! आश्चर्यमेतत् !

( प्रकाशम् ) सावित्रि ! निवर्तस्व । यस्य यावत्पर्यन्तं अधिकारोऽस्ति, स तावत्पर्यन्तमेव सहयोगं ददाति । इतः परं गमने मनुष्यस्य नास्त्यधिकारः। अतः स्वामितो निवृत्य स्वस्वामिनः सत्यवतः शरीरस्य प्रेतकर्म कृत्वा तस्योद्धारं कुरु ।

पतिपूजारतिर्भक्ता त्वं च साध्वी पतिव्रता ।
विनिवर्तस्व धर्मज्ञे ! ग्लानिर्भवति तेऽधुना ॥
नियमव्रतसंसिद्धे ! महाभागे ! पतिव्रते !
सावित्रि ! त्वं परावृत्य कुरुष्वास्यौर्ध्वदैहिकम् ॥

सावित्री—देव ! नैवं भवितुमर्हति ! यथा धूमः अग्निना सह तिष्ठति, प्रकाशः सूर्येण साकं वर्तते, छाया च मनुष्येण समं गच्छति, तथैव पत्नी अपि पत्या सहैव तिष्ठति । अतो मां पत्युः पृथक् कर्तुम् आकाशे मम गतिञ्च रोद्धुं न कोऽपि शक्नोति । यतः—

तपसा गुरुभक्त्या च भर्तुः स्नेहाद् व्रतेन च ।
तव चैव प्रसादेन न मे प्रतिहता गतिः ॥
पतिर्हि दैवतं स्त्रीणां पतिरेव परायणम् ।
अनुगम्यः स्त्रिया साध्व्या पतिः प्राणधनेश्वरः ॥
यत्र मे नीयते भर्ता स्वयं वा यत्र गच्छति ।
मयापि तत्र गन्तव्यं एष धर्मः सनातनः ॥

यमराजः—देवि ! त्वं सत्यं वदसि, तव अनेन निश्चयेन त्वयि नितरां प्रसन्नोऽस्मि, किं कुर्याम् ? विधातुर्नियमे निबद्धोऽस्मि, विवशोस्मि, सत्यवतो जीवनातिरिक्तं यथेच्छं वरं गृहीत्वा परावृता भव ।

अहं हि तुष्टोऽस्मि तवानया गिरा
स्वराक्षरव्यञ्जनहेतुयुक्तया ।

वरं वृणीष्वेह विनास्य जीवितं
ददामि ते सर्वमनिन्दिते ! वरम् ॥

सावित्री—दयालो ! यदि एवमस्ति, तर्हि श्रोतव्यं मम प्रार्थनम्—

च्युतः स्वराज्याद् वनवासमाश्रितो
ह्यलब्धचक्षुः श्वसुरो ममाश्रमे ।
स लब्धसंज्ञः बलवान् भवेन्नृप-
स्तव प्रसादाज्ज्वलनार्कसम्भव !

यमराजः—पतिव्रते सावित्रि !

ददामि ते सर्वमनिनिन्दते ! वरं
यथा त्वयोक्तं भविता च तत् तथा ।
परावृता त्वं भव देवि ! सांप्रतम्
व्यर्थः श्रमो न त्वयका विधेयः ॥

( इत्युक्त्वा वेगेन तारामण्डले आत्मानमनुगच्छन्तीं सावित्रीं दृष्ट्वा )

यमराजः—सावित्रि ! किं त्वं न निवृत्ता ! मया तु तवेच्छानुसारमेव ते श्वसुरस्य पुनः ज्योतिर्मयनेत्रप्राप्तये वरं दत्तमेव । कथं पुनः माम् अनुसरसि !

पतिव्रते ! महाभागे ! परितुष्टोऽस्मि ते पुनः ।
विना सत्यवतः प्राणैः वरं वरय मा चिरम् ॥

सावित्री—देव ! यदि एतादृशी दया अस्ति तर्हि इदमस्तु द्वितीयं वरम् !

हृतं पुरा मे श्वसुरस्य धीमतः
स्वमेव राज्यं स लभेत पार्थिवः ।
न च स्वधर्मं प्रजहीत मे गुरुः
द्वितीयमेवं वरयामि ते वरम् ॥

यमराजः—पतिव्रते ! एवमस्तु ! परावर्तस्व, अग्रे न गन्तव्यम् ।

( पुनश्चन्द्रमण्डलेऽपि अनुगच्छन्तीं तां दृष्ट्वा )

यमः—( स्वगतम् ) कथम् इयं चन्द्रमण्डलेऽपि समागता ! ( प्रकाशम् ) सावित्रि ! त्वं निवृत्ता ? त्वया व्यर्थः श्रमो न कर्तव्यः । दुराग्रहो न विधेयः । मया तु तव श्वसुरस्य पुनरपि राज्यलाभार्थम् द्वितीयमपि वरं दत्तमेव ।

सावित्री—भगवन् ! यथा शलभा दीपशिखायां आत्मानं भस्मसात् कुर्वन्ति, तथैव पतिव्रता नारी अपि पतिजीवने आत्मनो वलिदानं करोति । अतः—

पतिमादाय गच्छन्तमनुगन्तुमहं यदा ।
त्वां देव ! नहि शक्ष्यामि तदा त्यक्ष्यामि जीवितम् ॥

यमराजः—देवि ! सत्यं वदसि त्वमेव तावत् कथय, ब्रह्मणा ललाटलिखितं कः परिवर्तयितुं शक्नोति ? अत्र नास्ति कस्यचित् अधिकारः ।

सावित्री—कथं नास्ति कस्यापि अधिकारः ?

यमराजः—तर्हि कथय कस्यास्ति अधिकारः ?

सावित्री—ईश्वरस्य नियमपरिवर्तने अस्ति धर्मात्मनो महापुरुषस्याधिकारः, सत्यनिष्ठः परोपकारी धर्मात्मा विधातुर्विधानमपि परिवर्तयितुं शक्नोति, त्वमसि धर्मराजः, यतो हि—

धर्मेणेमाः प्रजाः सर्वाः यस्माद्रञ्जयसे प्रभो !
तस्मात्ते धर्मराजेति नाम सद्भिर्निगद्यते ॥

यमराजः—( स्वयम् ) इयं तु बहुवाक्चतुरा विद्यते, किं करोमि कथमेनां निवर्तयामि ? ( प्रकाशम् ) देवि ! अहं कर्तव्यपाशे बद्धोऽस्मि, विवशोऽस्मि, नो चेत् तव पतिम् अवश्यं मुञ्चेयम्, स्वामिनि अनया दृढनिष्ठया त्वयि अत्यन्तं प्रसन्नोऽस्मि । यदि अपरमपि वरं वाञ्छसि तर्हि तमपि दातुं शक्नोमि, कथय ? परं ममानुगमनविचारं त्यज ।

सावित्री—दयानिधे ! यदि तृतीयं वरं दातुमिच्छसि, तर्हि—

ममानपत्यः पृथ्वीपतिः पिता
भवेत्पितुः पुत्रशतं च औरसम् ।
कुलस्य सन्तानकरस्य तद्भवे
तृतीयमेवं वरयामि त्वद् वरम् ॥

यमः—एवमस्तु ! इयमपि तवेच्छा पूर्णा भविष्यति, किन्तु मम कथनं स्वीकृत्य परावृता भव ।

( इत्युक्त्वा यमः वेगेनाग्रे गच्छति सावित्री च भूयोऽपि तमनुगच्छति, वैतरणीतटे गत्वा )

यमः—( स्वगतम् ) महता प्रयत्नेन सावित्रीतो मुक्तिर्जाता, वैतरणी तट-पारकरणमात्रमेवास्ति विलम्बः । तदनन्तरम् आनन्द एव भविष्यति । ( पुनः सावित्रीं विलोक्य क्रोधमभिनीय ) कथं त्वं न निवृत्ता ? विधातृविधानस्य उल्लङ्घनं कर्तुं कथम् उद्यता असि ?

सावित्री—देव ! यथा छाया पुरुषं न कदापि विमुञ्चति, तथैवाहमपि आत्मनः सर्वस्वं पतिदेवं विहाय न क्षणमपि स्थातुं शक्नोमि । शृणु मे सिद्धान्तम्—

पतिर्देवः पतिः स्वर्गः पतिः प्राणाश्च सम्पदः ।
अत एव पतिर्यत्र तत्रैव सदनं मम ॥

यमः—
यथा यथा भाषसि धर्मसंहितम्
मनोऽनुकूलं सुपदं महार्थवत् ।
तथा तथा मे त्वयि भक्तिरुत्तमा
वरं वृणीष्वाप्रतिमं पतिव्रते ! ॥

देवि ! त्वयि नितरां प्रसन्नोऽस्मि सत्यवतो जीवनातिरिक्तम् अपरमेकं वरं वृणीष्व, परं ममानुगमनविचारं त्यज ।

सावित्री—ममात्मजः सत्यवतस्तथौरसं
भवेदुभाभ्यामिह यत्कुलोद्भवम् ।
शतं सुतानां बलिनां महात्मना-
मिमं चतुर्थं वरयामि ते वरम् ॥

यमः—देवि ! एवमस्तु ! तवाभिलषितमेव वरं ददामि, तव गर्भात् ते पितुः श्वसुरस्य च कुलमर्यादावर्द्धकाः यशस्विनो बलशालिनो धर्मात्मानो निष्कलंकाः शतपुत्राः भविष्यन्ति, इतो निवर्तस्व; त्यज ममानुगमनविचारम् ।

परावृता त्वं भव देवि ! नूनं
भविष्यतीदं सकलं यथोक्तम् ।
ममोपरोधस्तव च क्लमो वा
प्रजायते तेन च त्वां ब्रवीमि ॥

सावित्री—कुतः क्लमः कुतः क्लेशः सद्भिः सह समागमे ।
देव ! तस्मान्न मे ग्लानिः त्वत्समीपे सुरोत्तम ! ॥

परं भगवन् धर्मराज ! वरदानं दत्वा मम पत्युः प्राणाः कथं नीयन्ते त्वया !

यमराजः—देवि ! तव पत्युः त्यागस्य कदा वरदानं दत्तं मया; यदहं तं त्यजेयम् ?

सावित्री—भगवन् ! किं मम गर्भात् निष्कलंकशतपुत्ररत्नस्य वरदानं भवता न दत्तम् ?

यमराजः—तर्हि ?

सावित्री—यदि पतिव्रतायाः पतिरेव न स्थास्यति तर्हि तस्या गर्भात् उभयकुलमर्यादावर्द्धकानि निष्कलंकपुत्ररत्नानि कथं भविष्यन्ति ?

यमराजः—( स्मृत्वा ) आ एवम् ! धन्यासि सावित्रि ! त्वं धन्यासि, धन्यास्ति ते विचारशक्तिः, धन्यतरास्ति ते पतिभक्तिः, धन्यत-

मास्ति ते बुद्धिः, धन्यं चास्ति ते वाक्पाटवम्। अहं सर्वस्यान्तकोऽस्मि, सर्वांश्च प्राणिनः सदा पाशेन बध्नामि, परमद्य पतिव्रतायाः ते धर्मपाशबद्धः सन् वचनबद्धोऽस्मि जातः, गृहाण स्वस्वामिनः सत्यवतः प्राणान्, एभिः तस्य शरीरं संस्पृश्य स्वं सौभाग्यं स्थिरं कुरु।

( यमराजः सावित्र्यै सत्यवतः प्राणान् ददाति, सावित्री च हस्ताभ्यां सहर्षं गृहीत्वा )

यमः—पतिव्रते ! स्वस्वामिना सत्यवता सह वर्षचतुष्टयशतं सुखेन अचलं राज्यं भुक्त्वान्ते वैकुण्ठं गमिष्यसि। ते कीर्तिः प्रलयपर्यन्तं स्थिरा स्थास्यति। अद्यारभ्य काचित् नारी ज्येष्ठमासस्य पूर्णिमायां तिथौ व्रतं करिष्यति, ते कथां च श्रोष्यति; सा जन्मजन्मान्तरे विधवा न भविष्यति। त्वयि अत्यन्तं प्रसन्नः सन् एवं पञ्चमं वरदानं ददामि।

सावित्री—भगवन् ! सादरं त्वां प्रणमामि। एभिः अनेकैः वरदानैः अहं बहूपकृतास्मि।

यमः—देवि ! ते कल्याणं भवतु। ( इत्यभिधाय )

( यमः स्वस्थानं गच्छति, सावित्री च परावर्त्तते )

( पटाक्षेपः )

( सावित्रीसत्यवतोः प्रवेशः )

( सावित्री सत्यवतः प्राणैः सह तच्छरीरं स्पृशति, सत्यवांश्चोत्तिष्ठन् करतलाभ्यां नेत्रे स्पृशन् ब्रवीति )

सत्यवान्—प्रिये ! अहं चिरकालपर्यन्तं सुप्तवानासम्, महान् विलम्बो जातः। अद्य तु एवंविधं स्वप्नमद्राक्षम्, यं स्मृत्वैव हृदयं कम्पते, एतादृशं भयानकं स्वप्नं जीवने कदापि नावलोकितवान् आसम्।

सावित्री—नाथ ! स स्वप्नो नासीत् ।

सत्यवान्—तर्हि किमासीत् ?

सावित्री—सा सत्या घटना आसीत् ।

सत्यवान्—आः ! एवम् तर्हि केनाहं जीवयितः ? प्रिये ! किं त्वया एव मम प्राणाः रक्षिताः ?

सावित्री—आस्मिन् ! नाहं रक्षितवती भवन्तम्, किन्तु तव सेवया पितृ-भक्त्या च यद् बलं मया प्राप्तमासीत्, तेनैव यमराजं प्रसाद्य अद्य भवान् संरक्षितः ।

सत्यवान्—देवि ! त्वं धन्यासि त्वादृश्या एव आदर्शभूतया पतिव्रतया भार्यया भारतस्य मस्तकम् उन्नतं भवति, हिन्दूसमाजस्य गौरवं सुरक्षितं तिष्ठति, पतिव्रतानां चोत्साहो वर्द्धते, त्वयि अत्यन्तं प्रसन्नोऽस्मि । कथय किन्ते प्रियं कुर्याम् ?

सावित्री—नाथ ! अनुगृहीतास्मि । यदि एवं तर्हि अस्तु इदं शास्त्रवचनम्

स्वस्ति प्रजाभ्यः परिपालयन्ताम्
न्यायेन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु ॥

( पटप्रक्षेपः )

इति त्रिपाठ्युपाह्व पं० श्रीकृष्णमणिशास्त्रिणा
कृतं सावित्रीनाटकं समाप्तम् ।

# संक्षिप्त कथावस्तु

मद्रदेश में परम धार्मिक और ज्ञानी एक अश्वपति नाम के राजा थे। समग्र ऐश्वर्य सम्पन्न होने पर भी उन्हें कोई सन्तान न थी, इसलिए उन्होंने सावित्री देवी की बड़ी उपासना की। उग्र उपासना के प्रभाव से प्रसन्न होकर सावित्री देवी ने राजा को दर्शन देकर कहा कि राजन्! मैं तुझ पर अत्यन्त प्रसन्न हूं, जो चाहे वर मांग लो। राजा ने हाथ जोड़कर कहा कि देवि! आप की कृपा से मुझे सब कुछ है केवल एक सन्तान की कमी है। यह सुनकर सावित्री ने कहा—राजन् तुम्हारे भाग्य में पुत्र तो नहीं है; किन्तु दोनों कुलों की कीर्ति बढ़ाने वाली एक कन्या अवश्य होगी उसका नाम तुम मेरे नाम पर ही रखना। यह वरदान दे कर सावित्री चली गई। और राजा परम प्रसन्न होकर अपना राज्य कार्य करने लगे।

कुछ दिनों के बाद रानी के गर्भ से एक कन्या का जन्म हुआ उसका नाम सावित्री रक्खा गया। थोड़े दिनों में ही वह कन्या विवाह के योग्य योग्य हो गई। राजा ने उसके लिये योग्यवर खोजने के लिये बहुत बड़ा प्रयत्न किया; किन्तु सावित्री के योग्य वर नहीं मिल सका। राजा ने अपनी पुत्री की अमानुषिक बाढ़ को देखकर स्वयं सावित्री से ही कहा—बेटी! अब तुम विवाह के योग्य हो गयी हो इसलिए मैं तुम्हारे साथ अपने मन्त्री और ब्राह्मण को भेजता हूं, इनके सहयोग से तुम अपने योग्य वर ढूढँ लो। तदनुसार सावित्री अपने मन्त्री और ब्राह्मणों के साथ वर खोजने चली गई।

एक दिन नारद जी मद्रनरेश के यहां अकस्मात् आगए! नारद जी को देखकर राजा को बड़ा आनन्द हुआ, वे नारदजी को सत्कार पूर्वक सिंहासन पर बैठाकर बात चीत करने लगे। इतने में ही वर को पसन्द कर सावित्री भी वहां आगई और नारद जी एवं अपने पिता को हाथ जोड़कर प्रणाम किया। उसे देखकर नारद जी ने राजा से पूछा—राजन्! सावित्री के लिए

अभी तक कोई वर ढूंढ़ा या नहीं ? राजा ने हाथ जोड़कर कहा—भगवन् ! वर खोजने के लिए मैंने स्वयं सावित्री को ही भेजा था संयोग वश यह भी आपके सामने ही आगई। तब नारद जी ने सावित्री से पूछा कि बेटी ! तुमने किस वर से विवाह करने का निश्चय किया है ?

हाथ जोड़कर नम्रता पूर्वक सावित्री कहने लगी—देवर्षे ! महाराज द्युमत्सेन का राज्य रुक्मी ने हरण कर लिया है और अब वे अन्धे होकर रानी के साथ वन में रहते हैं उनके एक मात्र पुत्र सत्यवान् को मैंने अपना पति बनाने का निश्चय किया है। सावित्री के इस वचन को सुनकर नारदजी ने राजा से कहा—राजन् सत्यवान् वास्तव में बड़ा गुणवान् धर्मात्मा और माता पिता का भक्त है। वह स्वयं सत्य बोलने वाला है और उसके माता पिता भी सदा सत्य ही बोलते हैं इसी लिए उसका नाम सत्यवान् रक्खा गया है। विशेष क्या कहूं संसार में इस समय सत्यवान् के समान कोई दूसरा गुणी मनुष्य नही हैं। जिस प्रकार समुद्र रत्नों का आकर है उसी प्रकार सत्यवान् सभी गुणों का आकर है; किन्तु बड़े दुःख से कहना पड़ता है कि उसमें एक बहुत बड़ा दोष भी है। वह यह है कि सत्यवान् अल्पायु है एक वर्ष के बाद ही वह इस संसार से चल बसेगा।

यह सुनते ही राजा अश्वपति के सभी विचार बालू की भीत के समान एकाएक नष्ट हो गये और उन्होंने सावित्री से कहा—बेटी ! तुम को अब और वर ढूँढना चाहिए; अल्पायु के साथ विवाह करना अच्छा नहीं है। यह सुनकर सावित्री बोली—पिताजी मैंने एक बार जिसको मन से स्वीकार कर लिया है वही मेरा पति होगा। शारीरिक सम्बन्ध के लिए क्या अब तो मैं मन से भी दूसरे पति की अभिलाषा नहीं कर सकती। क्योंकि राजा एक बार ही कहता है, पण्डित लोग एक बार ही प्रतिज्ञा करते हैं जिसको आजीवन निबाहते हैं और भारतीय नारियाँ अपने पवित्र मनसे एक बार ही पति का वरण करती हैं। अब तो ईश्वर से यही प्रार्थना है कि जिसको मैंने एक बार पति के रूप में स्वीकार कर लिया है उससे मेरी बुद्धि विचलित न हो। वह दीर्घायु हो या अल्पायु, पर मेरा पति वही है। अब मैं अन्य पुरुष

को तो बात ही क्या है ? तैंतीस करोड देवता देवताओं के अधिपति इन्द्र को भी अपना पति नहीं वना सकती। सावित्री के इस दृढ़ निश्चय कों सुनकर नारद जीने सावित्री के पिता से कहा—राजन् ! अब तुमको सावित्री का विवाह सत्यवान् के साथ ही कर देना चाहिये इसकी पति भक्ति ही-इसका कल्याण करेगी।

यह कह कर नारद जी चले गये और सावित्री को लेकर मन्त्री पुरोहित और परिमित पुरुषों के साथ साथ उस बन में गये जहाँ राजा द्युमत्सेन राज्यरहित होकर अपनी रानी और राजकुमार सत्यवान् के सहित एक वृक्ष के नीचे निवास करते थे। सावित्री के सहित अश्वपति ने द्युमत्सेन चरणों में प्रणाम किया और अपना नाम बतलाया।

द्युमत्सेन द्वारा वन में आने का कारण पूछने पर राजा अश्वपति बोले · महाराज ! मेरी पुत्री सावित्री का विचार आप के पुत्र सत्यवान् के साथ विवाह करने का है और साथ ही इसमें मेरी भी संमति है इसलिए विवाह के योग्य सभी वस्तुओं को लेकर मैं आप की सेवा में उस्थित हुआ हूं। यह सुनकर द्युमत्सेन कुछ उदास होकर बोले-राजन् आप तो इस समय राज्यारूढ़ हैं और मैं राज्य से परिभ्रष्ट होकर बन में रहता हूं मैं एवं मेरी रानो दोनों अन्धे हैं और सर्वथा निर्धन हैं। आपकी कन्या वनके दुःखों को न जान कर ही ऐसा कहती है। तब अश्वपति कहा -- महाराज ! मेरी कन्या ने इन सब वातों पर पहले ही विचार कर लिया है। और यह कहती है कि जहां मेरी सास श्वशुर एवं पतिदेव निवास करेंगे वह स्थान दूसरे के लिये भले ही बन हो किन्तु मेरे लिए तो वह स्वर्ग ही है। इस प्रकार के दृढ़ निश्चय को सुनकर द्युमत्सेन ने उस सम्बन्ध को स्वीकार कर लिया। बाद शास्त्रोक्त विधि के अनुसार बड़े उत्साह से सत्यवान के साथ सावित्री का विवाह करके महाराज अश्वपति अपनी राजधानी में चले गये और सावित्री सत्यवान् को पति पाकर परम प्रसन्न हुई और सत्यवान् के साथ साथ सास श्वसुर की सेवा करने लगी। नारद जी ने सत्यवान् के अल्पायु की जो सूचना दी थी उससे सावित्री वेखबर नही थी किन्तु उनके कथनानुसार

एक एक दिन गिनती रही और सत्यवान् के दीर्घायु के लिए व्रत और पूजा करती हुई प्रतिदिन देवताओं से प्रार्थना किया करती थी।

प्रतिदिन के अनुसार एक दिन सत्यवान् हाथ में कुठार लेकर यथासमय जब बन में जाने के लिये तैयार हुआ तब सावित्री ने हाथ जोड़ उससे प्रार्थना की। नाथ! आप की सेवा में रहते हुए मुझको एक वर्ष हो गया किन्तु अभी तक इस समीपवर्ती वन को भी मैंने नहीं देखा। इसलिये आज मैं भी आप के साथ चलूँगी और वन को देखूंगी। यह सुनकर सत्यवान ने वन की कठिनाइयों को समझाया परन्तु राम बनगमन के अवसर पर सीता के समान सावित्री ने एक भी न सुना तब सत्यवान बोला—प्रिये ? तुम जानती ही हो कि मैं स्वतन्त्र नहीं हूँ यदि मेरे साथ चलना चाहती हो तो पहले माता पिता से आज्ञा ले लो। यह सुनकर सावित्री ने नम्रभाव से सास और श्वशुर के पास जाकर आज्ञा ले ली और सत्यवान के साथ बन के लिये चल पड़ी।

बन में जाकर सत्यवान ने पहले तो कुछ फूल और फलों को तोड़ा फिर लकड़ी काटने के लिए एक पेड़ पर चढ़ गया। पेड़ के उपर ही सत्यवान के शिर में वहुत वड़ी वेदना उत्पन्न हो गयी, जिससे विकल होकर वह नीचे उतर आया और सावित्री की गोद में शिर रख कर लेट गया। सावित्री घबड़ा कर उसका शिर दाबने लगी और आँचल से हवा करने करने लगी। थोड़ी देर बाद हाथ में पास लेकर यमराज स्वयं उपस्थित हो गये। उन्हें देखकर सत्यवान और अटपट बोलने लगा घबड़ाया। यह देख कर सावित्री बोली—

प्राण नाथ! यदि मैंने मनसा वाचा कर्मणा पातिव्रत्य धर्म का पालन किया है, मेरा पातिव्रत्य धर्म स्वप्न में भी भंग नहीं हुआ है तो कोई भी शक्ति आपको मुझसे वियुक्त नहीं कर सकती हैं इस लिए आप धैर्य धारण करें।

सावित्री की गोद में सत्यवान के शिर को देखकर यमराज सोचने लगे कि सावित्री पतिव्रता नारी है इसका तेज सहन नहीं हो सकता है। जब तक सत्यवान् का शिर इसकी गोद में रहेगा तब तक इसके प्राण को मैं नहीं छू सकता अब क्या करूँ ? कुछ सोचकर उसके शिर पर अपना पास घूमाने लगे यह देख कर सावित्री

उनसे प्रार्थना करने के लिए खड़ी हो गई जिससे सत्यवान् का शिर उससे दूर हो गया। अवसर पाकर यमराज ने सत्यवान् के प्राण को अपने पाश में बांध लिया और दक्षिण दिशा की ओर चल पड़े। व्याकुल होकर सावित्री ने यमराज से बड़ी प्रार्थना की यमराज ने सावित्री से ईश्वरीय नियम की अनुलङ्घनीयता बतला कर सत्यवान् के प्राण को लेकर यमपुरी की ओर प्रयाण कर ही दिया। तब सावित्री भी पति के प्राण ले जाते हुए यमराज के पीछे पीछे चल पड़ी। कुछ दूर जाने पर यमराज ने सावित्री को अपने पीछे आती हुई देखकर आश्चर्य प्रकट करते हुए कहा—सावित्री! जहाँ तक मनुष्य मनुष्य का साथ दे सकता है वहाँ तक तुमने अपने पति सत्यवान् का साथ दिया, अब मनुष्य के कर्तव्य से आगे की बात हैं। अब तुम लौटकर इसकी सद्गति के लिए और्ध्व-दैहिक क्रिया करो। यह सुनकर सावित्री बोली—

देव! पति स्त्रियों का परम देवता है पति ही स्त्रियों का सर्वस्व है। जहाँ मेरे पतिदेव ले जाये जाते है वहाँ मुझे भी जाना चाहिए यही सनातन धर्म है। तप, गुरु भक्ति, पति स्नेह, व्रत और आपकी कृपा से मेरी गति कहीं रुकने वाली नहीं है।

सावित्री के धर्म वचन को सुनकर यमराज बहुत प्रसन्न हुये और बोले—सावित्री तुम ठीक कह रही हो। तुम्हारे इस दृढ़ निश्चय से मैं तुम्हारे ऊपर अत्यन्त प्रसन्न हूँ। क्या करूँ? अपने कर्तव्य से विवश हूँ, नहीं तो तेरे पति को अवश्य छोड़ देता। हेतुयुक्त तुम्हारी वाणी को सुनकर मैं बहुत प्रसन्न हुआ हूँ, सत्यवान के जीवन को छोड़कर तुम जो वर मागोंगी वह दूँगा। तुम जो चाहो वर माग लो और अब लौट जाओ। यह सुन कर सावित्री ने विचारा कि संसार में धर्मपरायण स्त्री का यही कर्तव्य है कि वह पहले अपने श्वशुर कुलका कल्याण करे, फिर पिताके कुल का हित साधन करे और बाद अपने निजी हित साधन में उद्यत हो। इस दृष्टि से सावित्री ने यमराज से कहा— भगवन! अपने राज्य से भ्रष्ट और दोनों आखों से अन्धे होकर मेरे सास और श्वसुर वन में रहते हैं इसलिए आप यह वरदान

दे कि उनकी आखें पहले के समान ही ठीक हो जाय। इस पर यमराज ने कहा ऐसा ही होगा। फिर कुछ दूर जाने पर यमराज ने सावित्री को पीछे आते देखकर कहा कि तुम अभी नहीं लौटी ?

तुमने जो वर माँगा वह मैंने दे दिया—तुम्हारी इच्छा के अनुसार तुम्हारे श्वसुर की आँखें पुनः पूर्ववत् ज्योतिपूर्ण हो जायेंगी। तुमको मार्ग में चलने से जो कष्ट मिल रहा है उससे मुझको ग्लानि होती है। अतः अब तुम लौट जाओ जिससे तुम्हें श्रम न हो। यह सुनकर सावित्री कहने लगी—भगवन् ? जहाँ मेरे पतिदेव जाते हों वहाँ जाने में मुझे थोड़ा भी कष्ट या श्रम नहीं होता; प्रत्युत यह तो मेरा कर्तव्य ही है। इसके अतिरिक्त आप जैसे सत्पुरुषों के साथ चलना थोड़े पुण्य का फल नहीं है। सावित्री के इस प्रकार श्रद्धायुक्त वचनों को सुन कर यमराज ने फिर कहा—सावित्री तुम्हारे धार्मिक एवं न्याययुक्त वचनों को सुनकर मेरे मन में बड़ी प्रसन्नता हो रही है, इसलिए यदि चाहो तो सत्यवान् के जीवन के अतिरिक्त एक और वरदान माँग सकती हो। यह सुनकर सावित्री ने कहा—

देव! यदि ऐसी दया है तो दूसरा वर यह दीजिये कि मेरे बुद्धिमान् श्वसुर का राज्य रुक्मी ने हरण कर लिया है वह उनको मिल जाय और धर्म कार्य में उनका मन सदा लगा रहे। यह सुनकर यमराज ने कहा ऐसा ही होगा! किन्तु अब तुम आगे न जाकर यहीं से लौट जाओ। यह कह-कर जब यमराज चन्द्रमण्डल में जाकर पुनः पीछे लौट कर देखते हैं तो सावित्री पुनः उनके पीछे चली आ रही है। यह देख कर कुछ झुंझला कर यमराज बोले—सावित्री क्या अभी तुम नहीं लौटी ? क्यों बेकार श्रम कर रही हो? मैंने तो तुम्हारे श्वसुर को पुनः राज्यप्राप्ति का वरदान दे ही दिया, अब तुम क्या चाहती हो ? यह सुन कर सावित्री बोली—भगवन्! जिसप्रकार छोटे छोटे कीड़े दीपक की ज्योति के प्रेम में आत्मत्याग कर देते हैं उसी प्रकार पतिव्रता नारी अपने जीवन का पति प्रेम में बलिदान कर देती हैं। इसलिये मेरे पतिदेव के

प्राण को ले जाते हुए आपके पीछे पीछे जब नहीं चल सकूँगी तब अपना शरीर छोड़ दूँगी। यह दृढ़ निश्चय सुन कर यमराज बोले—सावित्री तुम ठीक कहती हो, परन्तु बताओ तो सही ब्रह्मा का लिखा हुआ कौन टाल सकता है? तब सावित्री ने कहा—परोपकारी धर्मात्मा, ईश्वर के नियम को भी बदल देने की शक्ति रखता है। आप धर्मपूर्वक प्रजाओं का नियमन करते हैं इसलिए आप का नाम धर्मराज है आप सब कुछ कर सकते हैं।

सावित्री के इस विवेकपूर्ण एवं युक्ति युक्त वचन को सुन कर यमराज ने कहा—सावित्री! पति के प्रति तुम्हारे निश्चय से मैं परम प्रसन्न हूँ? पर क्या करूँ कर्तव्य पाश में बँधा हूँ; इसलिए विवश हूँ, नहीं तो तुम्हारे पति को अवश्य छोड़ देता। यदि तीसरा भी वर माँगना चाहती हो तो माँग लो, पर पीछे पीछे चलने का विचार छोड़ दो। उस समय सावित्री ने अपने मैके की भलाई को ध्यान में रख कर कहा—धर्मराज! मेरे पिता को एक भी पुत्र नहीं है उन्हें सौ पुत्र हों, यही मेरी कामना है। तथास्तु! कहकर यमराज आगे बढ़ते हुए सोचने लगे कि बड़े प्रयत्न से किसी प्रकार सावित्री से गला छूटा! अब घर पहुँचने में वैतरणी नदी को पार करने मात्र का विलम्ब है। पीछे घूम कर देखते हैं तो पुनः सावित्री अनुसरण कर रही है कुछ नाराज से होकर पुनः यमराज बोले—सावित्री! ईश्वर के नियम का उल्लंघन करने के लिये तुम क्यों उद्यत हो गई हो? इस कंटकाकीर्ण मार्ग में चलती हुई तुझे देख कर मुझको बहुत कष्ट हो रहा है। अतः अब तुम पीछे लौट जाओ। यह सुन कर सावित्री ने कहा—प्राणिमात्र पर दया करना सत्पुरुषों का धर्म है फिर भी मुझ पर अनुग्रह न करके मुझे पीछे क्यों लौटा रहे हैं?

स्त्रियों के लिये पति ही देवता है, पति ही स्वर्ग है और पति ही प्राण है। इसलिये मेरे पतिदेव जहाँ हैं वहीं ही मेरा घर है; एवं वहाँ ही मुझे जाना चाहिये। सावित्री की इस धर्मयुक्त युक्तियों को सुन कर यमराज के हृदय में एक अद्भुत भाव उत्पन्न हो गया वे फिर सावित्री से कहने लगे-पतिव्रते! तुम ज्यों ज्यों धर्मानुकूल पति भक्ति की बात करती हो त्यों त्यों तुम्हारे प्रति मेरी श्रद्धा बढ़ती

जाती है। अतः सत्यवान् के प्राण को छोड़ कर एक और भी वरदान माँग सकती हो।

पतिकुल और पितृकुल की भलाई कर चुकने पर अब अपनी ही भलाई अवशेष थी; किन्तु एक पतिव्रता नारी को अपने पति देव की आयु वृद्धि के अतिरिक्त और कुछ मांगने की आश्यकता ही क्या थी? इस लिये सावित्री ने अन्तिम वरदान का उपक्रम इस प्रकार किया—

पतिदेव के विना मुझको न तो सुख की इच्छा है और न स्वर्ग की कामना ही है और न पति के विना अपने शरीरको ही रखना चाहती हूँ; फिर भी आपकी आज्ञा का उल्लंघन करना दोष समझकर वरदान माँगती हूँ कि मेरे पति सत्यवान् से मुझ में सौ पुत्र उत्पन्न हों, जो दोनों कुलों की मर्यादा को बढ़ावें। यह सुनकर यमराज ने कहा—तुमारे गर्भ से पुत्र उत्पन्न होंगे, जो यशस्वी मनस्वी बलिष्ट धर्मात्मा एवं निष्कलंक होंगे यह वरदान देकर यम चलने लगे तब सावित्री ने कहा—देव! मुझे सौ पुत्रों का वरदान देकर मेरे पतिदेव के प्राणो को अब कहाँ लेजा रहे हो! यदि मेरे पति ही नहीं रहेगें तो मुझसे निष्कलंक सौ पुत्र कैसे उत्पन्न होंगे? यह सुनकर यमराज ने विवश हो कहा कि सावित्री तुम धन्य हो! तुमारी पतिभक्ति, विचारशक्ति, धर्मनिष्ठा एवं बुद्धि धन्य है।

मैं सबका अन्तक हो कर भी तुम्हारी वचनचातुरी में फँस कर वचन बद्ध हो गया। लो अपने स्वामी सत्यवान् के प्राणों को ले लो, इससे उसके शरीर का स्पर्श कर देने पर वह जी उठेगा। सत्यवान् से तुम्हें सौ पुत्र प्राप्त होंगे और तुम दोनों चार सौ वर्ष तक इस भूतल पर राज्य करके वैकुण्ठ जाओगे। प्रलय पर्यन्त तुम्हारी कीर्ति का पताका फहराती रहेगी। आज से जो स्त्री ज्येष्ठ पूर्णिमा के दिन सावित्री व्रत करेंगी वह जन्मान्तर में भी विधवा नहीं होगी। यह वरदान मैं तुम्हारी पतिभक्ति से अत्यन्त प्रसन्न होकर स्वयं अपनी ओर से देता हूँ। यह कह कर यमराज अदृश्य हो गये सावित्री आकर वट वृक्ष के नीचे पड़े सत्यवान के मृत शरीर से उसके प्राण का स्पर्श कर दिया। वह तत्काल उठ बैठा। सावित्री ने सारी घटना सत्यवान् को

सुना दी बाद वे दोनों पुष्प और इन्धन लेकर आश्रम की ओर चल पड़े। इधर यमराज के वरदान से सत्यवान के माता पिता की आँखें खुल गईं। इतने में सत्यवान और सावित्री ने आकर उनको प्रणाम किया वे अत्यन्त प्रेम से अपने प्रिय पुत्र एवं पुत्र वधू को गोद में बिठा लिया। धीरे धीरे सारे संसार में सावित्री के उस अनुपम व्रत की लहर फैल गई। राजधानी के लोगों ने महाराज द्युमत्सेन को ले जाकर राजसिंहासन पर बैठा दिया। और वे पूर्ववत् सुखपूर्वक अपना राज्य करने लगे। उधर सावित्री के पिता अश्वपति को भी सौ पुत्रों की प्राप्ति हो गई। सावित्री और सत्यवान दोनों ने सौ पुत्रों से युक्त हो कर चार सौ वर्ष राज्य किया और अन्त में वैकुण्ठ चले गये।

ॐ शान्तिः ! शान्तिः !! शान्तिः !!!

---

## भारतीय साहित्य ग्रन्थमाला, काशी से प्रकाशित पुस्तकें

१. चन्द्रप्रभचरितम् — परीक्षोपयोगी हिंदी और संस्कृत व्याख्या के सहित

२. कुमारसम्भव ५ सर्ग — ,, ,,

३. योगदर्शनसमीक्षा — पतञ्जलि मुनि के योग सूत्र के विवेचनात्मक अनुवाद के सहित

४. त्रिवेणिका — शक्ति, लक्षणा, व्यञ्जना के गवेषणात्मक अनुसंधान सहित

५. अष्टादशपुराणपरिचय — अठारहों पुराणों के मौलिक विषयों के दिग्दर्शन के साथ साथ पौराणिक विषयों के गवेषणात्मक निबंधों के सहित

६. सांख्यकारिका — अन्वय संस्कृत हिंदी व्याख्या और अनुसंधानात्मक विस्तृत भूमिका के सहित

७. पुराणतत्त्वमीमांसा — युक्तियुक्त शंका समाधानों के साथ-साथ पौराणिक तत्वों की विवेचना के सहित

व्यवस्थापक

भारतीय साहित्य ग्रन्थमाल

भारतीय साहित्य विद्यालय, १४।२६, टेढ़ी